THE

# ARTHASASTRA OF KAUṬILYA

*with Bengali translation*

[Volume I]

BY

DR. RADHAGOVINDA BASAK, M.A., Ph.D.,
*Vidyāvācaspati,*

*Retired Senior Professor of Sanskrit, Presidency College, Calcutta, and Ex-Lecturer, Calcutta and Dacca Universities.*

GENERAL PRINTERS & PUBLISHERS PRIVATE LIMITED
CALCUTTA

PUBLISHED BY : SURAJIT C. DAS,
GENERAL PRINTERS & PUBLISHERS PVT. LTD.,
119, DHARAMTALA STREET, CALCUTTA-13.

1970

*Third Edition*

PRINTED BY SURAJIT C. DAS, AT GENERAL PRINTERS AND PUBLISHERS PRIVATE LIMITED, (ABINAS PRESS), 119, DHARAMTALA STREET, CALCUTTA-13.

# कौटिलीयम् अर्थशास्त्रम्

[ प्रथमः खण्डः ]

. कलिकाता-प्रेसिडेन्सि-महाविद्यालयस्य प्राक्तन-
प्रधान-संस्कृताध्यापकेन एम्. ए., पि. एइच्. डि.,
विद्यावाचस्पतीत्युपाधियुक्तेन
श्रीराधागोविन्दवसाकेन
सम्पादितं वङ्गभाषयानूदितञ्च

जेनारेल प्रिण्टार्स एयाण्ड पाब्लिशार्स प्राइभेट लिमिटेड्
इत्याख्य मुद्रणालये श्रीसुरजितचन्द्रदासेन
मुद्रितं प्रकाशितञ्च
१९७० खृष्टाब्दे कलिकातानगर्य्याम्।

# সম্পাদকের নিবেদন

কৌটিলীয় অর্থশাস্ত্রের মৎকৃত বঙ্গানুবাদের দ্বিতীয় সংস্করণের সহিত মূল সংস্কৃত গ্রন্থের পাঠ সংযোজিত করার জন্য অনেক কৃতবিদ্য অধ্যাপক ও পাঠকের অনুরোধ আসিয়াছিল। আমি বিশেষভাবে অবগত আছি যে, এই মূল গ্রন্থের অনেকখানি অংশ কলিকাতা বিশ্ববিদ্যালয়ের এম. এ. পরীক্ষার জন্য পাঠ্য বলিয়া নির্দ্ধারিত আছে। সম্প্রতি বি. এ. অনার্স পরীক্ষাতেও কতক অংশ পাঠ্য বলিয়া নির্দ্দিষ্ট হইয়াছে। কিন্তু, বাজারে, বিশেষতঃ বাঙ্গালা দেশের বাজারে, কৌটিলীয় অর্থশাস্ত্রের মূল সংস্কৃত গ্রন্থ পাওয়া দুষ্কর হইয়াছে। তাই ছাত্র-ছাত্রী ও অন্যান্য পাঠক-পাঠিকাদিগের সুবিধার জন্য অনুবাদগ্রন্থের সঙ্গে মূল সংস্কৃত অর্থশাস্ত্র সংযোজিত করিয়া প্রকাশ করা হইল। এখন আর ছাত্র-ছাত্রীদের গ্রন্থাগারের গ্রন্থ হইতে মূলের অনুলিপি প্রস্তুত করার কষ্টের প্রয়োজন হইবে না। আরও একটি প্রকৃষ্ট কথা এই যে, মূল সংস্কৃত গ্রন্থের সঙ্গে মিলাইয়া লইয়া বঙ্গানুবাদ পড়িলে পাঠকের মনে অর্থের সুগমতা প্রতিভাত হইতে পারিবে। মূল সংস্কৃত গ্রন্থের পূর্ব্ববর্ত্তী সম্পাদকগণের ধৃত পাঠ পর্য্যালোচনা করিয়া যাহা মূল গ্রন্থের সঙ্গত পাঠ বলিয়া বিবেচিত হই[illegible]দনায় গৃহীত হইয়াছে। ইতি—

শ্রীরাধাগোবিন্দ বসাক

ইং ১লা জুলাই, ১৯৬৪ সাল

# प्रथमखण्डस्य विषयानुक्रमणी

## विनयाधिकारिकं—प्रथममधिकरणम्


| अध्यायसंख्या | विषयावली | पृष्ठम् |
|---|---|---|
| १ | राजवृत्तिः | 1 |
| २ | विद्यासमुद्देशे आन्वीक्षिकीस्थापना | 4 |
| ३ | ,, त्रयीस्थापना | 4 |
| ४ | ,, वार्तादण्डनीतिस्थापना | 5 |
| ५ | वृद्धसंयोगः | 6 |
| ६ | इन्द्रियजयः | 7 |
| ७ | इन्द्रियजये राजर्षिवृत्तम् | 7 |
| ८ | अमात्योत्पत्तिः | 8 |
| ९ | मन्त्रिपुरोहितोत्पत्तिः | 9 |
| १० | उपधाभिः शौचाशौचज्ञानममात्यानाम् | 10 |
| ११ | गूढपुरुषोत्पत्तौ संस्थोत्पत्तिः | 11 |
| १२ | ,, सञ्चारोत्पत्तिः | 12 |
| १३ | स्वविषये कृत्याकृत्यपक्षरक्षणम् | 13 |
| १४ | परविषये कृत्याकृत्यपक्षोपग्रहः | 14 |
| १५ | मन्त्राधिकारः | 16 |
| १६ | दूतप्रणिधिः | 18 |
| १७ | राजपुत्ररक्षणम् | 19 |
| १८ | अवरुद्धवृत्तमवरुद्धे च वृत्तिः | 21 |
| १९ | राजप्रणिधिः | 22 |
| २० | निशान्तप्रणिधिः | 23 |
| २१ | आत्मरक्षितकम् | 24 |


## अध्यक्षप्रचारः—द्वितीयमधिकरणम्


| अध्यायसंख्या | विषयावली | पृष्ठम् |
|---|---|---|
| १ | जनपदनिवेशः | 26 |
| २ | भूमिच्छिद्रविधानम् | 28 |
| ३ | दुर्गविधानम् | 29 |
| ४ | दुर्गनिवेशः | 30 |

| अध्यायसंख्या | विषयावली | पृष्ठम् |
| --- | --- | --- |
| ५ | सन्निधातृनिचयकर्म | 32 |
| ६ | समाहर्तृसमुदयप्रस्थापनम् | 33 |
| ७ | अक्षपटले गाणनिक्याधिकारः | 34 |
| ८ | समुदयस्य युक्तापहृतस्य प्रत्यानयनम् | 36 |
| ९ | उपयुक्तपरीक्षा | 37 |
| १० | शासनाधिकारः | 39 |
| ११ | कोशप्रवेश्यरत्नपरीक्षा | 42 |
| १२ | आकरकर्मान्तप्रवर्तनम् | 45 |
| १३ | अक्षशालायां सुवर्णाध्यक्षः | 47 |
| १४ | विशिखायां सौवर्णिकप्रचारः | 49 |
| १५ | कोष्ठागाराध्यक्षः | 52 |
| १६ | पण्याध्यक्षः | 54 |
| १७ | कुप्याध्यक्षः | 55 |
| १८ | आयुधागाराध्यक्षः | 56 |
| १९ | तुलामानपौतवम् | 57 |
| २० | देशकालमानम् | 59 |
| २१ | शुल्काध्यक्षः | 61 |
| २२ | शुल्काध्यक्षे—शुल्कव्यवहारः | 63 |
| २३ | सूत्राध्यक्षः | 63 |
| २४ | सीताध्यक्षः | 64 |
| २५ | सुराध्यक्षः | 66 |
| २६ | सूनाध्यक्षः | 68 |
| २७ | गणिकाध्यक्षः | 69 |
| २८ | नावध्यक्षः | 71 |
| २९ | गोऽध्यक्षः | 72 |
| ३० | अश्वाध्यक्षः | 74 |
| ३१ | हस्त्यध्यक्षः | 76 |
| ३२ | हस्त्यध्यक्षे—हस्तिप्रचारः | 77 |
| ३३ | रथाध्यक्षः, पत्त्यध्यक्षः, सेनापतिप्रचारश्च | 79 |
| ३४ | मुद्राध्यक्षः विवीताध्यक्षश्च | 79 |

| अध्यायसंख्या | विषयावली | पृष्ठम् |
|---|---|---|
| ३५ | समाहर्तृप्रचारः गृहपतिवैदेहकतापसव्यञ्जनाः प्रणिधयश्च | 80 |
| ३६ | नागरिकप्रणिधिः | 81 |

## धर्मस्थीयं—तृतीयमधिकरणम्

| अध्यायसंख्या | विषयावली | पृष्ठम् |
|---|---|---|
| १ | व्यवहारस्थापना, विवादपदनिबन्धः | 83 |
| २ | विवाहसंयुक्तम्—विवाहधर्मः, स्त्रीधनकल्पः, आधिवेदनिकम् | 86 |
| ३ | ,, —शुश्रूषाभर्मपारुष्यद्वेषातिचारोपकारव्यवहारप्रतिषेधाश्च | 88 |
| ४ | ,, —निष्पतनं पथ्यनुसरणं ह्रस्वप्रवासः दीर्घप्रवासश्च | 89 |
| ५ | दायविभागः—दायक्रमः | 91 |
| ६ | ,, —अंशविभागः | 92 |
| ७ | ,, —पुत्रविभागः | 93 |
| ८ | वास्तुकम्—गृहवास्तुकम् | 95 |
| ९ | वास्तुकम्—वास्तुविक्रयः (सीमाविवादः, क्षेत्रविवादः, मर्यादास्थापनं, बाधाबाधिकम्) | 96 |
| १० | वास्तुकम्—विवीतक्षेत्रपथहिंसा, समयस्यानपाकर्म च | 97 |
| ११ | ऋणादानम् | 99 |
| १२ | उपनिधिकम् | 101 |
| १३ | दासकर्मकरकल्पः—(दासकल्पः कर्मकरकल्पे स्वाम्यधिकारः) | 103 |
| १४ | दासकर्मकरकल्पे—भृतकाधिकारः सम्भूयसमुत्थानम् | 105 |
| १५ | विक्रीतक्रीतानुशयः | 107 |
| १६ | दत्तस्यानपाकर्म, अस्वामिविक्रयः, स्वस्वामिसंबन्धः | 108 |
| १७ | साहसम् | 109 |
| १८ | वाक्पारुष्यम् | 110 |
| १९ | दण्डपारुष्यम् | 111 |
| २० | द्यूतसमाह्वयं प्रकीर्णकानि | 113 |

# कौटिलीयं अर्थशास्त्रम्

## विनयाधिकारिकं—प्रथमाधिकरणम्

ॐ नमश्शुक्रबृहस्पतिभ्याम्

पृथिव्या लाभे पालने च यावन्त्यर्थशास्त्राणि पूर्वाचार्यैः प्रस्थापितानि प्रायशस्तानि संहृत्यैकमिदमर्थशास्त्रं कृतम् । तस्यायं प्रकरणाधिकरणसमुद्देशः—

विद्यासमुद्देशः । वृद्धसंयोगः । इन्द्रियजयः । अमात्योत्पत्तिः । मन्त्रिपुरोहितोत्पत्तिः । उपधाभिश्शौचाशौचज्ञानममात्यानाम् । गूढपुरुषोत्पत्तिः । गूढपुरुषप्रणिधिः । स्वविषये कृत्याकृत्यपक्षरक्षणम् । परविषये कृत्याकृत्यपक्षोपग्रहः । मन्त्राधिकारः । दूतप्रणिधिः । राजपुत्ररक्षणम् । अवरुद्धवृत्तम् । अवरुद्धे वृत्तिः । राजप्रणिधिः । निशान्तप्रणिधिः । आत्मरक्षितकम् ।। इति विनयाधिकारिकं प्रथमाधिकरणम् ।।

जनपदविनिवेशः । भूमिच्छिद्रविधानम् । दुर्गविधानम् । दुर्गनिवेशः । सन्निधातृनिचयकर्म । समाहर्तृसमुदयप्रस्थापनम् । अक्षपटले गाणनिक्याधिकारः । समुदयस्य युक्तापहृतस्य प्रत्यानयनम् । उपयुक्तपरीक्षा । शासनाधिकारः । कोशप्रवेश्यरत्नपरीक्षा । आकरकर्मान्तप्रवर्तनम् । अक्षशालायां सुवर्णाध्यक्षः । विशिखायां सौवर्णिकप्रचारः । कोषागाराध्यक्षः । पण्याध्यक्षः । कुप्याध्यक्षः । आयुधागाराध्यक्षः । तुलामानपौतवम् । देशकालमानम् । शुल्काध्यक्षः । सूत्राध्यक्षः । सीताध्यक्षः । सुराऽध्यक्षः । सूनाध्यक्षः । गणिकाऽध्यक्षः । नावध्यक्षः । गोऽध्यक्षः । अश्वाध्यक्षः । हस्त्यध्यक्षः । रथाध्यक्षः । पत्त्यध्यक्षः । सेनापतिप्रचारः । मुद्राऽध्यक्षः । विवीताध्यक्षः । समाहर्तृप्रचारः । गृहपतिवैदेहकतापसव्यञ्जनाः प्रणिधयः । नागरिकप्रणिधिः ।। इत्यध्यक्षप्रचारो द्वितीयमधिकरणम् ।।

व्यवहारस्थापना । विवादपदनिबन्धः । विवाहसंयुक्तम् । दायविभागः । वास्तुकम् । समयस्यानपाकर्म । ऋणादानम् । औपनिधिकम् ।

दासकर्मकरकल्पः। सम्भूयसमुत्थानम्। विक्रीतक्रीतानुशयः। दत्तस्यानपाकर्म। अस्वामिविक्रयः। स्वस्वामिसम्बन्धः। साहसम्। वाक्पारुष्यम्। दण्डपारुष्यम्। द्यूतसमाह्वयम्। प्रकीर्णकानि॥ इति धर्मस्थीयं तृतीयमधिकरणम्॥

---

कारुकरक्षणम्। वैदेहकरक्षणम्। उपनिपातप्रतीकारः। गूढाजीविनां रक्षा। सिद्धव्यञ्जनैर्माणवप्रकाशनम्। शङ्कारूपकर्माभिग्रहः। आशुमृतकपरीक्षा। वाक्यकर्मानुयोगः। सर्वाधिकरणरक्षणम्। एकाङ्गवधनिष्क्रयः। शुद्धश्चित्रश्च दण्डकल्पः। कन्याप्रकर्म। अतिचारदण्डः॥ इति कण्टकशोधनं चतुर्थमधिकरणम्।

---

दाण्डकर्मिकम्। कोशाभिसंहरणम्। भृत्यभरणीयम्। अनुजीविवृत्तम्। समयाचारिकम्। राज्यप्रतिसन्धानम्। एकैश्वर्यम्। इति योगवृत्तं पञ्चममधिकरणम्॥

---

प्रकृतिसम्पदः। शमव्यायामिकम्। इति मण्डलयोनिष्षष्ठमधिकरणम्॥

---

षाड्गुण्यसमुद्देशः। क्षयस्थानवृद्धिनिश्चयः। संश्रयवृत्तिः। समहीनज्यायसां गुणाभिनिवेशः। हीनसन्धयः। विगृह्यासनम्। सन्धायासनम्। विगृह्य यानम्। सन्धाय यानम्। सम्भूय प्रयाणम्। यातव्यामित्रयोरभिग्रहचिन्ता। क्षयलोभविरागहेतवः प्रकृतीनाम्। सामवायिकविपरिमर्शः। संहितप्रयाणिकम्। परिपणितापरिपणितापसृताश्च सन्धयः। द्वैधीभाविकास्सन्धिविक्रमाः। यातव्यवृत्तिः। ‘ अनुग्राह्यमित्रविशेषाः। मित्रहिरण्यभूमिकर्मसन्धयः। पार्ष्णिग्राहचिन्ता। हीनशक्तिपूरणम्। बलवता विगृह्योपरोधहेतवः। दण्डोपनतवृत्तम्। दण्डोपनायिवृत्तम्। सन्धिकर्म। सन्धिमोक्षः। मध्यमचरितम्। उदासीनचरितम्। मण्डलचरितम्॥ इति षाडगुण्यं सप्तममधिकरणम्॥

---

प्रकृतिव्यसनवर्गः। राजराज्ययोर्व्यसनचिन्ता। पुरुषव्यसनवर्गः। पीडनवर्गः। स्तम्भवर्गः। कोशसंगवर्गः। बलव्यसनवर्गः। मित्रव्यसनवर्गः॥ इति व्यसनाधिकारिकमष्टममधिकरणम्॥

---

शक्तिदेशकालबलाबलज्ञानम् । यात्राकालाः । बलोपादानकालाः सन्नाहगुणाः । प्रतिबलकर्म । पश्चात्कोपचिन्ता । बाह्याभ्यन्तरप्रकृतिकोपप्रतीकारः । क्षय-व्ययलाभविपरिमर्शः । बाह्याभ्यन्तराश्चापदः ।। दूष्यशत्रुसंयुक्ताः । अर्थानर्थसंशययुक्ताः । तासामुपायविकल्पजास्सिद्धयः ।। इत्यभियास्यत्कर्म नवममधिकरणम् ।।

---

स्कन्धावारनिवेशः । स्कन्धावारप्रयाणम् । बलव्यसनावस्कन्दकालरक्षणम् । कूटयुद्धविकल्पाः । स्वसैन्योत्साहनम् । स्वबलान्यबलव्यायोगः । युद्धभूमयः । पत्त्यश्वरथहस्तिकर्माणि । पक्षकक्षोरस्यानां बलाग्रतो व्यूहविभागः । सारफल्गुबलविभागः । पत्त्यश्वरथहस्तियुद्धानि । दण्डभोगमण्डलासंहतव्यूहव्यूहनम् । तस्य प्रतिव्यूहसंस्थापनम् ।। इति साङ्ग्रामिकं दशममधिकरणम् ।।

---

भेदोपादानानि । उपांशुदण्डः ।। इति सङ्घवृत्तमेकादशमधिकरणम् ।।

---

दूतकर्म । मन्त्रयुद्धम् । सेनामुख्यवधः । मण्डलप्रोत्साहनम् । शस्त्राग्निरसप्रणिधयः । विवधासारप्रसारवधः । योगातिसन्धानम् । दण्डातिसन्धानम् । एकविजयः ।। इत्याबलीयसं द्वादशमधिकरणम् ।

---

उपजापः । योगवामनम् । अपसर्पप्रणिधिः । पर्युपासनकर्म । अवमर्दः । लब्धप्रशमनम् ।। इति दुर्गलम्भोपायस्त्रयोदशमधिकरणम ।।

---

परघातप्रयोगः । प्रलम्भनम् । स्वबलोपघातप्रतीकारः । इत्यौपनिषदिकं चतुर्दशमधिकरणम् ।।

---

तन्त्रयुक्तयः ।। इति तन्त्रयुक्तिः पञ्चदशमधिकरणम् ।।

---

शास्त्रसमुद्देशः—पञ्चदशाधिकरणानि, सपञ्चाशदध्यायशतं साशीति प्रकरणशतं षट्श्लोकसहस्राणीति ।।

सुखग्रहणविज्ञेयं तत्त्वार्थपदनिश्चितम् ।
कौटिल्येन कृतं शास्त्रं विमुक्तग्रन्थविस्तरम् ।।

इति कौटिलीयार्थशास्त्रे विनयाधिकारिके प्रथमाधिकरणे
प्रथमोऽध्यायः राजवृत्तिः ।

## १ प्रक. विद्यासमुद्देशः—आन्वीक्षिकीस्थापना ।

(आन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्चेति विद्याः ।)

त्रयी वार्ता दण्डनीतिश्चेति मानवाः—त्रयीविशेषो ह्यान्वीक्षिकीति ।

वार्ता दण्डनीतिश्चेति बार्हस्पत्याः—संवरणमात्रं हि त्रयी लोकयात्राविद इति ।

दण्डनीतिरेका विद्येत्यौशनसाः—तस्यां हि सर्वविद्यारम्भाः प्रतिबद्धा इति ।

चतस्र एव विद्या इति कौटिल्यः । ताभिर्धर्मार्थौ यद्विद्यात्तद्विद्यानां विद्यात्वम् ।

(सांख्यं योगो लोकायत चेत्यान्वीक्षिकी ।)

धर्माधर्मौ त्रय्याम् । अर्थानर्थौ वार्तायाम् । नयापनयौ दण्डनीत्याम् । बलाबले चैतासां हेतुभिरन्वीक्षमाणा लोकस्योपकरोति, व्यसनेऽभ्युदये च बुद्धिमवस्थापयति, प्रज्ञावाक्यक्रियावैशारद्यं च करोति ।

प्रदीपस्सर्वविद्यानामुपायस्सर्वकर्मणाम् ।
आश्रयस्सर्वधर्माणां शश्वदान्वीक्षिकी मता ॥

इति कौटिलीयार्थशास्त्रे विनयाधिकारिके प्रथमाधिकरणे
द्वितीयोऽध्यायः विद्यासमुद्देशे अन्वीक्षिकीस्थापना ॥

---

## १ प्रक. विद्यासमुद्देशः—त्रयीस्थापना ।

(सामर्ग्यजुर्वेदास्त्रयस्त्रयी ।) अथर्ववेदेतिहासवेदौ च वेदाः । शिक्षा कल्पो व्याकरणं निरुक्तं छन्दोविचितिर्ज्योतिषमिति चाङ्गानि ।

एष त्रयीधर्मश्चतुर्णां वर्णानामाश्रमाणां च स्वधर्मस्थापनादौपकारिकः ।

स्वधर्मो ब्राह्मणस्याध्ययनमध्यापनं यजनं याजनं दानं प्रतिग्रहश्चेति ।

क्षत्रियस्याध्ययनं यजन दानं कृषिपाशुपाल्ये वणिज्या च । शूद्रस्य द्विजातिशुश्रूषा वार्ता कारुकुशीलवकर्म च ।

गृहस्थस्य स्वकर्माजीवस्तुल्यैरसमानर्षिभिर्वैवाह्यमृतुगामित्वं देवपित्रतिथिभृत्येषु त्यागश्शेषभोजन च ।

ब्रह्मचारिणस्स्वाध्यायोऽग्निकार्याभिषेकौ भैक्षव्रतत्वमाचार्ये प्राणान्तिकी वृत्तिस्तदभावे गुरुपुत्रे सब्रह्मचारिणि वा।

वानप्रस्थस्य ब्रह्मचर्यं भूमौ शय्या जटाऽजिनधारणमग्निहोत्राभिषेकौ देवतापित्रतिथिपूजा वन्यश्चाहारः।

परिव्राजकस्य संयतेन्द्रियत्वमनारम्भो निष्किञ्चनत्वं सङ्गत्यागो भैक्षमनेकत्रारण्यवासो बाह्यमाभ्यन्तरं च शौचम्। सर्वेषामहिंसा सत्यं शौचमनसूयाऽऽनृशंस्यं क्षमा च।

स्वधर्मस्स्वर्गायानन्त्याय च। तस्यातिक्रमे लोकस्सङ्करादुच्छिद्येत—

तस्मात्स्वधर्मं भूतानां राजा न व्यभिचारयेत्।
स्वधर्मं संदधानो हि प्रेत्य चेह च नन्दति॥
व्यवस्थितार्यमर्यादः कृतवर्णाश्रमस्थितिः।
त्रय्या हि रक्षितो लोकः प्रसीदति न सीदति॥

इति कौटिलीयार्थशास्त्रे विनयाधिकारिके प्रथमाधिकरणे
तृतीयोऽध्यायः विद्यासमुद्देशे त्रयीस्थापना॥

# १ प्रक. विद्यासमुद्देशः—वार्तादण्डनीतिस्थापना।

कृषिपाशुपाल्ये वणिज्या च वार्ता धान्यपशुहिरण्यकुप्यविष्टिप्रदानादौपकारिकी। तया स्वपक्षं परपक्षं च वशीकरोति कोशदण्डाभ्याम्।

आन्वीक्षिकीत्रयीवार्तानां योगक्षेमसाधनो दण्डः। तस्य नीतिर्दण्डनीतिः—अलब्धलाभार्था, लब्धपरिरक्षणी, रक्षितविवर्धनी, वृद्धस्य तीर्थेषु प्रतिपादनी च।

तस्यामायत्ता लोकयात्रा। तस्माल्लोकयात्रार्थी नित्यमुद्यतदण्डस्स्यात्।

"न ह्येवंविधं वशोपनयनमस्ति भूतानां यथा दण्डः" इत्याचार्याः॥

नेति कौटिल्यः। तीक्ष्णदण्डो हि भूतानामुद्वेजनीयः। मृदुदण्डः परिभूयते। यथार्हदण्डः पूज्यः। सुविज्ञातप्रणीतो हि दण्डः प्रजा धर्मार्थकामैर्योजयति। दुष्प्रणीतः कामक्रोधाभ्यामज्ञानाद्वानप्रस्थपरिव्राजकानपि कोपयति, किमङ्ग पुनर्गृहस्थान्? अप्रणीतो हि मात्स्यन्यायमुद्भावयति। बलीयानबलं हि ग्रसते दण्डधराभावे। तेन गुप्तः प्रभवतीति॥

चतुर्वर्णाश्रमो लोको राज्ञा दण्डेन पालितः ।
स्वधर्मकर्माभिरतो वर्तते स्वेषु वेश्मसु[1] ॥

इति कौटिलीयार्थशास्त्रे विनयाधिकारिके प्रथमाधिकरणे चतुर्थोऽध्यायः
विद्यासमुद्देशे वार्तास्थापना दण्डनीतिस्थापना च ।
विद्यासमुद्देशस्समाप्तः ॥

## २ प्रक. वृद्धसंयोगः ।

तस्माद्दण्डमूलास्तिस्रो विद्याः ।

विनयमूलो दण्डः प्राणभृतां योगक्षेमावहः ।

कृतकस्स्वाभाविकश्च विनयः । क्रिया हि द्रव्यं विनयति नाद्रव्यम् । शुश्रूषाश्रवणग्रहणधारणविज्ञानोहापोहतत्त्वाभिनिविष्टबुद्धिं विद्या विनयति नेतरम् ।

विद्यानां तु यथास्वमाचार्यप्रामाण्याद्विनयो नियमश्च ।

वृत्तचौलकर्मा लिपिं सङ्ख्यानं चोपयुञ्जीत ।

वृत्तोपनयनस्त्रयीमान्वीक्षकीं च शिष्टेभ्यः, वार्तामध्यक्षेभ्यः, दण्डनीतिं वक्तृप्रयोक्तृभ्यः ।

ब्रह्मचर्यं चाषोडशाद्वर्षात् । अतो गोदानं दारकर्म च ।

अस्य नित्यश्च विद्यावृद्धसंयोगो विनयवृद्ध्यर्थं, तन्मूलत्वाद्विनयस्य ।

पूर्वमहर्भागं हस्त्यश्वरथप्रहरणविद्यासु विनयं गच्छेत् । पश्चिममितिहासश्रवणे । पुराणमितिवृत्तमाख्यायिकोदाहरणं धर्मशास्त्रमर्थशास्त्रं चेतीतिहासः ।

शेषमहोरात्रभागमपूर्वग्रहणं गृहीतपरिचयं च कुर्यात् । अगृहीतानामाभीक्ष्ण्यश्रवणं च ।

श्रुताद्धि प्रज्ञोपजायते, प्रज्ञया योगो, योगादात्मवत्तेति विद्यासामर्थ्यम्

विद्याविनीतो राजा हि प्रजानां विनये रतः ।
अनन्यां पृथिवीं भुङ्क्ते सर्वभूतहिते रतः ॥

इति कौटिलीयार्थशास्त्रे विनयाधिकारिके प्रथमाधिकरणे
पञ्चमोऽध्यायः वृद्धसंयोगः ।

---

[1] वर्त्मसु इति पाठान्तरम् ।

# ३ प्रक. इन्द्रियजयः ।

विद्याविनयहेतुरिन्द्रियजयः कामक्रोधलोभमानमदहर्षत्यागात्कार्यः । कर्णत्वगक्षिजिह्वाघ्राणेन्द्रियाणां शब्दस्पर्शरूपरसगन्धेष्वविप्रतिपत्तिरिन्द्रियजयः, शास्त्रार्थानुष्ठानं वा । कृत्स्नं हि शास्त्रमिदमिन्द्रियजयः ।

तद्विरुद्धवृत्तिरवश्येन्द्रियश्चातुरन्तोऽपि राजा सद्यो विनश्यति—यथा दाण्डक्यो नाम भोजः कामात् ब्राह्मणकन्यामभिमन्यमानस्सबन्धुराष्ट्रो विननाश करालश्च वैदेहः ।

कोपाज्जनमेजयो ब्राह्मणेषु विक्रान्तः, तालजङ्घश्च भृगुषु । लोभादैलश्चातुर्वर्ण्यमत्याहारयमाणः, सौवीरश्चाजविन्दुः । मानाद् रावणः परदारानप्रयच्छन् दुर्योधनो राज्यादंशं च । मदाड्डम्भोद्भवो भूतावमानी, हैहयश्चार्जुनः । हर्षाद्वातापिरगस्त्यमत्यासादयन्, वृष्णिसङ्घश्च द्वैपायनमिति ।

एते चान्ये च बहवः शत्रुषड्वर्गमाश्रिताः ।
सबन्धुराष्ट्रा राजानो विनेशुरजितेन्द्रियाः ॥
शत्रुषड्वर्गमुत्सृज्य जामदग्न्यो जितेन्द्रियः ।
अम्बरीषश्च नाभागो बुभुजाते चिरं महीम् ॥

इति कौटिलीयार्थशास्त्रे विनयाधिकारिके प्रथमाधिकरणे
षष्ठोऽध्यायः इन्द्रियजये अरिष्टवर्गत्यागः ।

तस्मादरिषड्वर्गत्यागेनेन्द्रियजयं कुर्वीत । वृद्धसंयोगेन प्रज्ञाम्, चारेण चक्षुः, उत्थानेन योगक्षेमसाधनम्, कार्यानुशासनेन स्वधर्मस्थापनं, विनयं विद्योपदेशेन, लोकप्रियत्वमर्थसंयोगेन, हितेन वृत्तिम् ।

एवं वश्येन्द्रियः परस्त्रीद्रव्यहिंसाश्च वर्जयेत्, स्वप्नं लौल्यमनृतमुद्धतवेषत्वमनर्थसंयोगं च । अधर्मसंयुक्तमनर्थसंयुक्तं च व्यवहारम् ।

धर्मार्थाविरोधेन कामं सेवेत । न निस्सुखस्स्यात् । समं वा त्रिवर्गमन्योन्यानुबन्धम् । एको ह्यत्यासेवितो धर्मार्थकामानामात्मानमितरौ च पीडयति । अर्थ एव प्रधान इति कौटिल्यः— अर्थमूलौ हि धर्मकामाविति ।

मर्यादां स्थापयेदाचार्यानमात्यान् वा । य एनमपायस्थानेभ्यो वारयेयुः, छायानालिकाप्रतोदेन वा रहसि प्रमाद्यन्तमभितुदेयुः ॥

सहायसाध्यं राजत्वं चक्रमेकं न वर्तते ।
कुर्वीत सचिवांस्तस्मात्तेषां च शृणुयान्मतम् ॥

इति कौटिलीयार्थशास्त्रे विनयाधिकारिके प्रथमाधिकरणे
सप्तमोऽध्यायः इन्द्रियजये राजर्षिवृत्तम् ।
इन्द्रियजयस्समाप्तः ।

## ४ प्रक. अमात्योत्पत्तिः ।

सहाध्यायिनोऽमात्यान् कुर्वीत दृष्टशौचसामर्थ्यत्वाद् इति भरद्वाजः । ते ह्यस्य विश्वास्याः भवन्तीति ॥

नेति विशालाक्षः । सहक्रीडितत्वात् परिभवन्त्येनम् । ये ह्यस्य गुह्यसधर्माणस्तानमात्यान् कुर्वीत —समानशीलव्यसनत्वात्, ते ह्यस्य मर्मज्ञभयान्नापराध्यन्तीति ।

साधारण एष दोषः इति पराशरः—तेषामपि मर्मज्ञभयात्कृतात्कृतान्यनुवर्तेत ।

यावद्भ्यो गुह्यमाचष्टे जनेभ्यः पुरुषाधिपः ।
अवशः कर्मणा तेन वश्यो भवति तावताम् ॥

य एनमापत्सु प्राणाबाधयुक्तास्वनुगृह्णीयुस्तानमात्यान् कुर्वीत । दृष्टानुरागत्वादिति ।

नेति पिशुनः—भक्तिरेषा न बुद्धिगुणः । सङ्ख्यातार्थेषु कर्मसु नियुक्ता ये यथाऽऽदिष्टमर्थं सविशेषं वा कुर्युस्तानमात्यान् कुर्वीत, दृष्टगुणत्वादिति ।

नेति कौणपदन्तः—अन्यैरमात्यगुणैरयुक्ता ह्येते । पितृपैतामहानमात्यान् कुर्वीत, दृष्टापदानत्वात् । ते ह्येनमपचरन्तमपि न त्यजन्ति सगन्धत्वात् । अमानुषेष्वपि चैतत् दृश्यते—गावो ह्यसगन्धं गोगणमतिक्रम्य सगन्धेष्वेवावतिष्ठन्ते इति ॥

नेति वातव्याधिः । ते ह्यस्य सर्वमवगृह्य स्वामिवत्प्रचरन्तीति । तस्मान्नीतिविदो नवानमात्यान् कुर्वीत । नवास्तु यमस्थाने दण्डधरं मन्यमाना नापराध्यन्तीति ।

नेति बाहुदन्तीपुत्रः—शास्त्रविददृष्टकर्मा कर्मसु विषादं गच्छेत् । अभिजनप्रज्ञाशौचशौर्यानुरागयुक्तानमात्यान् कुर्वीत, गुणप्राधान्यादिति ।

सर्वमुपपन्नमिति कौटिल्यः—कार्यसामर्थ्याद्धि पुरुषसामर्थ्यं कल्प्यते। सामर्थ्यतश्च—

विभज्यामात्यविभवं देशकालौ च कर्म च।
अमात्यास्सर्व एवैते कार्यास्स्युर्न तु मन्त्रिणः॥

इति कौटिलीयार्थशास्त्रे विनयाधिकारिके प्रथमाधिकरणे
अष्टमोऽध्यायः अमात्योत्पत्तिः।

## ५ प्रक. मन्त्रिपुरोहितोत्पत्तिः।

जानपदोऽभिजातः स्ववग्रहः कृतशिल्पश्चक्षुष्मान् प्राज्ञो धारयिष्णुर्दक्षो वाग्मी प्रगल्भः प्रतिपत्तिमानुत्साहप्रभावयुक्तः क्लेशसहश्शुचिर्मैत्री दृढ-भक्तिश्शीलबलारोग्यसत्त्वसंयुक्तः स्तम्भचापल्यवर्जितस्संप्रियो वैराणा-मकर्तेत्यमात्यसम्पत्।

अतः पादार्धगुणहीनौ मध्यमावरौ।

तेषां जनपदमवग्रहं चाप्यतः परीक्षेत—समानविद्येभ्यः शिल्पं शास्त्रचक्षुष्मत्तां च; कर्मारम्भेषु प्रज्ञां धारयिष्णुतां दाक्ष्यं च; कथायोगेषु वाग्मित्वं प्रागल्भ्यं प्रतिभानवत्त्वं च; आपद्युत्साहप्रभावौ क्लेशसहत्वं च; संव्यवहाराच्छौचं मैत्रतां दृढभक्तित्वं च; संवासिभ्यश्शीलबलारोग्यसत्त्व-योगमस्तम्भमचापल्यं च; प्रत्यक्षतः संप्रियत्वमवैरित्वं च।

प्रत्यक्षपरोक्षानुमेया हि राजवृत्तिः। स्वयं दृष्टं प्रत्यक्षम्, परोपदिष्टं परोक्षम्। कर्मसु कृतेनाकृतावेक्षणमनुमेयम्॥

यौगपद्यात्तु कर्मणामनेकत्वादनेकस्थत्वाच्च देशकालात्ययो मा भूत इति परोक्षममात्यैः कारयेदित्यमात्यकर्म।

पुरोहितमुदितोदितकुलशीलं षडङ्गे वेदे दैवे निमित्ते दण्डनीत्यां च अभिविनीतमापदां दैवमानुषीणां अथर्वभिरुपायैश्च प्रतिकर्तारं कुर्वीत। तमाचार्यं शिष्यः पितरं पुत्रो भृत्यस्स्वामिनमिव चानुवर्तेत।

ब्राह्मणेनैधितं क्षत्रं मन्त्रिमन्त्राभिमन्त्रितम्।
जयत्यजितमत्यन्तं शास्त्रानुगमशस्त्रितम्॥

इति कौटिलीयार्थशास्त्रे विनयाधिकारिके प्रथमाधिकरणे
नवमोऽध्यायः मन्त्रिपुरोहितोत्पत्तिः।

---

# ६ प्रक. उपधाभिश्शौचाशौचज्ञानममात्यानाम् ।

मन्त्रिपुरोहितसखस्सामान्येष्वधिकरणेषु स्थापयित्वाऽमात्यानुपधाभिश्शोचयेत् ।

पुरोहितमयाज्ययाजनाध्यापने नियुक्तममृष्यमाणं राजा अवक्षिपेत् । स सत्रिभिश्शपथपूर्वमेकैकममात्यमुपजापयेत्—अधार्मिकोऽयं राजा, साधु धार्मिकमन्यमस्य तत्कुलीनमवरुद्धं कुल्यमेकप्रग्रहं सामन्तमाटविकमौपपादिकं वा प्रतिपादयामः । सर्वेषामेतद्रोचते, कथं वा तवेति । प्रत्याख्याने शुचिरिति धर्मोपधा ।

सेनापतिरसत्प्रग्रहेणावक्षिप्तस्सत्रिभिरेकैकममात्यमुपजापयेल्लोभनीयेनार्थेन राजविनाशनाय सर्वेषामेतद्रोचते, कथं वा तवेति । प्रत्याख्याने शुचिरित्यर्थोपधा ।

परिव्राजिका लब्धविश्वासाऽन्तःपुरे कृतसत्कारा महामात्रमेकैकमुपजपेत्—राजमहिषी त्वां कामयते कृतसमागमोपाया । महानर्थश्च भविष्यतीति । प्रत्याख्याने शुचिरिति कामोपधा ।

प्रवहणनिमित्तमेकोऽमात्यः सर्वानमात्यानावाहयेत् । तेनोद्वेगेन राजा तानवरुन्ध्यात् । कापटिकच्छात्रः पूर्वावरुद्धस्तेषामर्थमानावक्षिप्तमेकैकममात्यमुपजपेत्—असत्प्रवृत्तोऽयं राजा, साध्वेनं हत्वा अन्यं प्रतिपादयिष्यामः । सर्वेषामेतद्रोचते, कथं वा तवेति । प्रत्याख्याने शुचिरिति भयोपधा ।

तत्र धर्मोपधाशुद्धान् धर्मस्थीयकण्टकशोधनेषु स्थापयेत् ।

अर्थोपधाशुद्धान् समाहर्तृसन्निधातृनिचयकर्मसु ।

कामोपधाशुद्धान् बाह्याभ्यन्तरविहाररक्षासु ।

भयोपधाशुद्धानासन्नकार्येषु राज्ञः । सर्वोपधाशुद्धान् मन्त्रिणः कुर्यात् । सर्वत्राशुचीन् खनिद्रव्यहस्तिवनकर्मान्तेषूपयोजयेत् ।

त्रिवर्गभयसंशुद्धानमात्यान्स्वेषु कर्मसु ।
अधिकुर्याद्यथाशौचमित्याचार्या व्यवस्थिताः ॥
न त्वेव कुर्यादात्मानं देवीं वा लक्ष्मीश्वरः ।
शौचहेतोरमात्यानामेतत्कौटिल्यदर्शनम् ॥
न दूषणमदुष्टस्य विषेणेवाम्भसश्चरेत् ।
कदाचिद्धि प्रदुष्टस्य नाधिगम्येत भेषजम् ॥
कृता च कलुषा बुद्धिरुपधाभिश्चतुर्विधा ।
नागत्वाऽन्तर्निवर्तेत स्थितास्सत्त्ववतां धृतौ ॥

तस्माद्बाह्यमधिष्ठानं कृत्वा चार्ये चतुर्विधे ।
शौचाशौचममात्यानां राजा मार्गेत सत्रिभिः ॥

इति कौटिलीयार्थशास्त्रे विनयाधिकारिके प्रथमाधिकरणे
दशमोऽध्यायः उपधाभिश्शौचाशौचज्ञानममात्यानां ।

## ७ प्रक. गूढपुरुषोत्पत्तिः ।

उपधाभिश्शुद्धामात्यवर्गो गूढपुरुषानुत्पादयेत् कापटिकोदास्थितगृहपतिकवैदेहकतापसव्यञ्जनान् सत्रितीक्ष्णरसदभिक्षुकीश्च ।

परमर्मज्ञः प्रगल्भः छात्रः कापटिकः । तमर्थमानाभ्यामुत्साह्य मन्त्री ब्रूयात्—राजानं मां च प्रमाणं कृत्वा यस्य यदकुशलं पश्यसि तत्तदानीमेव प्रत्यादिशेति ।

प्रव्रज्याप्रत्यवसितः प्रज्ञाशौचयुक्त उदास्थितः । स वार्तकिर्मप्रदिष्टायां भूमौ प्रभूतहिरण्यान्तेवासा कर्म कारयेत् । कर्मफलाच्च सर्वप्रव्रजितानां ग्रासाच्छादनावसथान् प्रतिविदध्यात् । वृत्तिकामांश्चोपजपेत्—एतेनैव वेषेण राजार्थश्चरितव्यो भक्तवेतनकाले चोपस्थातव्यमिति ।

सर्वप्रव्रजिताश्च स्वं स्वं वर्गमुपजपेयुः ।

कर्षको वृत्तिक्षीणः प्रज्ञाशौचयुक्तो गृहपतिकव्यञ्जनः । स कृषिकर्मप्रदिष्टायां भूमाविति—समानं पूर्वेण ।

वाणिजको वृत्तिक्षीणः प्रज्ञाशौचयुक्तो वैदेहकव्यञ्जनः । स वणिक्कर्मप्रदिष्टायां भूमाविति—समानं पूर्वेण ।

मुण्डो जटिलो वा वृत्तिकामस्तापसव्यञ्जनः । स नगराभ्याशे प्रभूतमुण्डजटिलान्तेवासी शाकं यवसमुष्टिं वा मासद्विमासान्तरं प्रकाशमश्नीयात्, गूढमिष्टमाहारम् । वैदेहकान्तेवासिनश्चैनं समिद्धयोगैरर्चयेयुः । शिष्याश्चास्यावेदयेयुः—"असौ सिद्धस्सामेधिकः" इति । समेधाशस्तिभिश्चाभिगतानामङ्गविद्यया शिष्यसंज्ञाभिश्च कर्माण्यभिजनेऽवसितान्यादिशेदल्पलाभमग्निदाहं चोरभयं दूष्यवधं तुष्टदानं विदेशप्रवृत्तिज्ञानं "इदमद्य श्वो वा भविष्यतीदं वा राजा करिष्यती"ति ।

तदस्य गूढास्सत्रिणश्च संवादयेयुः ।

सत्वप्रज्ञावाक्यशक्तिसम्पन्नानां राजभाव्यमनुव्याहरेत् मन्त्रिसंयोगं च। मन्त्री चैषां वृत्तिकर्मभ्यां वियतेत। ये च कारणादभिक्रुद्धास्तानर्थमानाभ्यां शमयेत्, अकारणक्रुद्धान् तूष्णीं दण्डेन राजद्विष्टकारिणश्च।

पूजिताश्चार्थमानाभ्यां राज्ञा राजोपजीविनाम्।
जानीयुः शौचमित्येताः पञ्च संस्थाः प्रकीर्तिताः॥

इति कौटिलीयार्थशास्त्रे विनयाधिकारिके प्रथमाधिकरणे
एकादशोऽध्यायः गूढपुरुषोत्पत्तौ संस्थोत्पत्तिः।

## ८ प्रक. गूढपुरुषप्रणिधिः।

ये चास्य सम्बन्धिनोऽवश्यभर्तव्यास्ते लक्षणमङ्गविद्यां जम्भकविद्यां मायागतमाश्रमधर्मं निमित्तमन्तरचक्रमित्यधीयानाः सत्रिणस्संसर्गविद्या वा।

ये जनपदे शूरास्त्यक्तात्मानो हस्तिनं व्यालं वा द्रव्यहेतोः प्रतियोधयेयुस्ते तीक्ष्णाः।

ये बन्धुषु निस्नेहाः क्रूराश्चालसाश्च ते रसदाः।

परिव्राजिका वृत्तिकामा दरिद्रा विधवा प्रगल्भा ब्राह्मण्यन्तःपुरे कृतसत्कारा महामात्रकुलान्यधिगच्छेत्। एतया मुण्डावृषल्यो व्याख्याताः। इति सञ्चाराः।

तान् राजा स्वविषये मन्त्रिपुरोहितसेनापतियुवराजदौवारिकान्तर्वंशिकप्रशास्तृसमाहर्तृसन्निधातृप्रदेष्टृनाय (गरि?) कपौरव्यावहारिककार्मान्तिकमन्त्रिपरिषदध्यक्षदण्डदुर्गान्तपालाटविकेषु श्रद्धेयदेशवेषशिल्पभाषाभिजनापदेशान् भक्तितस्सामर्थ्ययोगाच्चापसर्पयेत्।

तेषां बाह्यं चारं छत्रभृङ्गारव्यजनपादुकासनयानवाहनोपग्राहिणः तीक्ष्णा विद्युः। तं सत्रिणः संस्थास्वर्पयेयुः।

सूदारालिकस्नापकसंवाहकास्तरककल्पकप्रसाधकोदकपरिचारका रसदाः कुब्जवामनकिरातमूकबधिरजडान्धच्छद्मानो नटनर्तकगायनवादकवाग्जीवनकुशीलवाः स्त्रियश्चाभ्यन्तरं चारं विद्युः। तं भिक्षुक्यः संस्थास्वर्पयेयुः।

संस्थानामन्तेवासिनः संज्ञालिपिभिश्चारसञ्चारं कुर्युः। न चान्योन्यं संस्थास्ते वा विद्युः।

भिक्षुकीप्रतिषेधे द्वास्स्थपरम्परा मातापितृव्यञ्जनाः, शिल्पकारिकाः कुशीलवा दास्यो वा गीतपाठ्यवाद्यभाण्डगूढलेख्यसंज्ञाभिर्वा चारं निर्हरेयुः। दीर्घरोगोन्मादाग्निरसविसर्गेण वा गूढनिर्गमनम्।

त्रयाणामेकवाक्ये सम्प्रत्ययः। तेषामभीक्ष्णविनिपाते तूष्णीदण्डः प्रतिषेधो वा।

कण्टकशोधनोक्ताश्चापसर्पाः परेषु कृतवेतना वसेयुः।

सम्पातनिश्चारार्थं, त उभयवेतनाः।

गृहीतपुत्रदारांश्च कुर्यादुभयवेतनान्।
तांश्चारिप्रहितान् विद्यात्तेषां शौचं च तद्विधैः॥
एवं शत्रौ च मित्रे च मध्यमे चावपेच्चरान्।
उदासीने च तेषां च तीर्थेष्वष्टादशस्वपि॥
अन्तर्गृहचरास्तेषां कुब्जवामनषण्डकाः।
शिल्पवत्यः स्त्रियो मूकाश्चित्राश्च म्लेच्छजातयः॥
दुर्गेषु वणिजस्संस्था, दुर्गान्ते सिद्धतापसाः।
कर्षकोदास्थिता राष्ट्रे राष्ट्रान्ते व्रजवासिनः॥
वने वनचराः कार्यश्श्रमणाटविकादयः।
परप्रवृत्तिज्ञानार्थाः शीघ्राश्चारपरम्पराः॥
परस्य चैते बोद्धव्याः तादृशैरेव तादृशाः।
चारसञ्चारिणस्संस्था गूढाश्चागूढसंज्ञिता॥
अकृत्यान् कृत्यपक्षीयैः दर्शितान् कार्यहेतुभिः।
परापसर्पज्ञानार्थं मुख्यानन्तेषु वासयेत्॥

इति कौटिलीयार्थशास्त्रे विनयाधिकारिके प्रथमाधिकरणे
द्वादशोऽध्यायः गूढपुरुषोत्पत्तौ सञ्चारोत्पत्तिः गूढपुरुषप्रणिधिः

## १० प्रक. स्वविषये कृत्याकृत्यपक्षरक्षणम्।

कृतमहामात्यापसर्पः पौरजानपदानपसर्पयेत्।

सत्रिणो द्वन्द्विनस्तीर्थसभाशालापूगजनसमवायेषु विवादं कुर्युः—"सर्वगुणसम्पन्नश्चायं राजा श्रूयते। न चास्य कश्चित् गुणो दृश्यते, यः पौरजानपदान् दण्डकराभ्यां पीडयति" इति।

तत्र येऽनुप्रसंशेयुः तानितरस्तं च प्रतिषेधयेत्—"मात्स्यन्यायाभिभूताः प्रजा मनुं वैवस्वतं राजानं चक्रिरे। धान्यषड्भागं पण्यदशभागं हिरण्यं चास्य भागधेयं प्रकल्पयामासुः। तेन भृता राजानः प्रजानां योगक्षेमवहाः। तेषां किल्बिषं दण्डकरा हरन्ति, यो योगक्षेमवहाश्च प्रजानाम्। तस्मादुञ्छषड्भागमारण्यका अपि निवपन्ति—"तस्यैतद्भागधेयं योऽस्मान् गोपायती"ति। इन्द्रयमस्थानमेतत् राजानः प्रत्यक्षहेडप्रसादाः। तानवमन्यमानान् दैवोऽपि दण्डः स्पृशति। तस्माद्राजानो नावमन्तव्याः" इति क्षुद्रकान् प्रतिषेधयेत्।

किंवदन्तीं च विद्युः।

ये चास्य धान्यपशुहिरण्यान्याजीवन्ति, तैरुपकुर्वन्ति, व्यसने अभ्युदये वा; कुपितं बन्धुं राष्ट्रं वा व्यावर्तयन्त्यमित्रमाटविकं वा प्रतिषेधयन्ति, तेषां मुण्डजटिलव्यञ्जनास्तुष्टातुष्टत्वं विद्युः।

तुष्टान् भूयः पूजयेत्। अतुष्टान् तुष्टिहेतोस्त्यागेन साम्ना च प्रसादयेत्। परस्पराद्वा भेदयेदेनान् सामन्ताटविकतत्कुलीनावरुद्धेभ्यश्च। तथाऽप्यतुष्यतो दण्डकरसाधनाधिकारेण वा जनपदविद्वेषं ग्राहयेत्। विद्विष्टानुपांशुदण्डेन जनपदकोपेन वा साधयेत्। गुप्तपुत्रदारानाकरकर्मान्तेषु वा वासयेत् परेषामास्पदभयात्।

क्रुद्धलुब्धभीतावमानिनस्तु परेषां कृत्याः। तेषां कार्तान्तिकनैमित्तिकमौहूर्तिकव्यञ्जनाः परस्पराभिसम्बन्धं अमित्रप्रतिसम्बन्धं वा विद्युः।

तुष्टानर्थमानाभ्यां पूजयेत्। अतुष्टान् सामदानभेददण्डैस्साधयेत्।

> एवं स्वविषये कृत्यानकृत्यांश्च विचक्षणः।
> परोपजापात्संरक्षेत् प्रधानान् क्षुद्रकानपि॥

इति कौटिलीयार्थशास्त्रे विनयाधिकारिके प्रथमाधिकरणं त्रयोदशोऽध्यायः स्वविषये कृत्याकृत्यपक्षरक्षणं।

## १० प्रक. परविषये कृत्याकृत्यपक्षोपग्रहः।

कृत्याकृत्यपक्षोपग्रहस्स्वविषये व्याख्यातः। परविषये वाच्यः।

संश्रुत्यार्थान् विप्रलब्धः, तुल्यकारिणोशिल्पे वोपकारे वा विमानितः, वल्लभावरुद्धः, समाहूय पराजितः, प्रवासोपतप्तः, कृत्वा व्ययमलब्धकार्यः

स्वधर्माद्दायाद्याद्वोपरुद्धः मानाधिकाराभ्यां भ्रष्टः, कुल्यैरन्तर्हितः, प्रसभाभिमृष्टस्त्रीकः, काराभिन्यस्तः, परोक्तदण्डितः, मिथ्याचारवारितः, सर्वस्वमाहारितः, बन्धनपरिक्लिष्टः, प्रवासितबन्धुरिति क्रुद्धवर्गः ।

स्वयमुपहतः, विप्रकृतः, पापकर्माभिख्यातः, तुल्यदोषदण्डेनोद्विग्नः, पर्यात्तभूमिः, दण्डेनोपनतः, सर्वाधिकरणस्थः, सहसोपचितार्थः, तत्कुलीनोपाशंसुः, प्रद्विष्टो राज्ञा, राजद्वेषी चेति भीतवर्गः ।

परिक्षीणोऽत्यात्तस्वः कदर्यो व्यसन्यत्याहितव्यवहारश्चेति लुब्धवर्गः ।

आत्मसम्भावितो मानकामः शत्रुपूजामर्षितो नीचैरुपहितस्तीक्ष्णस्साहसिको भोगेनासन्तुष्ट इति मानिवर्गः ।

तेषां मुण्डजटिलव्यञ्जनैर्यो यद्भक्तिः कृत्यपक्षीयस्तं तेनोपजापयेत्-- "यथा मदान्धो हस्ती मत्तेनाधिष्ठितो यद्यदासादयति तत्सर्वं प्रमृद्नात्येवमयमशास्त्रचक्षुरन्धो राजा पौरजानपदवधायाभ्युत्थितः । शक्यमस्य प्रतिहस्तिप्रोत्साहनेनापकर्तुम्, अमर्षः क्रियताम्" इति क्रुद्धवर्गमुपजापयेत् ।

"यथा लीनस्सर्पो यस्माद्भयं पश्यति तत्र विषमुत्सृजत्येवमयं राजा जातदोषाशङ्कस्त्वयि पुरा क्रोधविषमुत्सृजत्यन्यत्र गम्यताम्" इति भीतवर्गमुपजापयेत् ।

"यथाश्वगणिनां धेनुश्श्वभ्यो दुग्धे न ब्राह्मणेभ्य एवमयं राजा सत्त्वप्रज्ञावाक्यशक्तिहीनेभ्यो दुग्धे नात्मगुणसम्पन्नेभ्यः । असौ राजा पुरुषविशेषज्ञस्सेव्यता"मिति लुब्धवर्गमुपजापयेत् ।

"यथा चण्डालोदपानश्चण्डालानामेवोपभोग्यो नान्येषामेवमयं राजा नीचो नीचानामेवोपभोग्यो न त्वद्विधानामार्याणाम् । असौ राजा पुरुषविशेषज्ञः तत्र गम्यता"मिति मानिवर्गमुपजापयेत् ।

> तथेति प्रतिपन्नांस्तान् संहितान् पणकर्मणा ।
> योजयेत यथाशक्ति सापसर्पान् स्वकर्मसु ॥
> लभेत सामदानाभ्यां कृत्यांश्च परभूमिषु ।
> अकृत्यान् भेददण्डाभ्यां परदोषांश्च दर्शयेत् ॥

इति कौटिलीयार्थशास्त्रे विनयाधिकारिके प्रथमाधिकरणे
चतुर्दशोऽध्यायः परविषये कृत्याकृत्यपक्षोपग्रहः ।

## ११ प्रक. मन्त्राधिकारः।

कृतस्वपक्षपरपक्षोपग्रहः कार्यारम्भान् चिन्तयेत्। मन्त्रपूर्वास्सर्वारम्भाः।

तदुद्देशः संवृतः कथानामनिःस्रावी पक्षिभिरप्यनालोक्यस्स्यात। श्रूयते हि शुकशारिकाभिः मन्त्रो भिन्नश्श्वभिरन्यैश्च तिर्यग्योनिभिः।

तस्मान्मन्त्रोद्देशमनायुक्तो नोपगच्छेत्। उच्छिद्येत मन्त्रभेदी।

मन्त्रभेदो हि दूतामात्यस्वामिनामिङ्गिताकाराभ्याम्। इङ्गितमन्यथावृत्तिः। आकृतिग्रहणमाकारः।

तस्य संवरणं आयुक्तपुरुषरक्षणमाकार्यकालादिति। तेषां हि प्रमादमदसुप्तप्रलापकामादिरुत्सेकः प्रच्छन्नोऽवमतो वा मन्त्रं भिनत्ति। तस्माद्रक्षेन्मन्त्रम्।

मन्त्रभेदोह्ययोगक्षेमकरो राज्ञस्तदायुक्तपुरुषाणां च। तस्मात्—"गुह्यमेको मन्त्रयेते"ति भारद्वाजः। मन्त्रिणामपि हि मन्त्रिणो भवन्ति। तेषामप्यन्ये। सैषा मन्त्रिपरम्परा मन्त्रं भिनत्ति।

तस्मान्नास्य परे विद्युः कर्म किञ्चिच्चिकीर्षितम्।
आरब्धारस्तु जानीयुरारब्धं कृतमेव वा॥

"नैकस्य मन्त्रसिद्धिरस्ती"ति विशालाक्षः। प्रत्यक्षपरोक्षानुमेया हि राजवृत्तिः। (अनुपलब्धस्य ज्ञानमुपलब्धस्य निश्चयबलाधानमर्थद्वैधस्य संशयच्छेदनमेकदेशदृष्टस्य शेषोपलब्धिरिति मन्त्रिसाध्यमेतत्। तस्माद्बुद्धिवृद्धैः सार्धमासीत मन्त्रम्॥)

न किञ्चदवमन्येत सर्वस्य शृणुयान्मतम्।
बालस्याप्यर्थवद्वाक्यमुपयुञ्जीत पण्डितः॥

"एतन्मन्त्रज्ञानं नैतन्मन्त्ररक्षण"मिति पराशरः। यदस्य कार्यमभिप्रेतं तत्प्रतिरूपकं मन्त्रिणः पृच्छेत्। 'कार्यमिदमेवमासीदेवं वा यदि भवेत्तत्कथं कर्तव्यमिति'। ते यथा ब्रूयुः तत्कुर्यात्। एवं मन्त्रोपलब्धिः संवृतिश्च भवतीति।

"न" इति पिशुनः। मन्त्रिणो हि व्यवहितमर्थं वृत्तमवृत्तं वा पृष्टमनादरेण ब्रुवन्ति प्रकाशयन्ति वा। स दोषः। तस्मात्कर्मसु ये येष्वभिप्रेतास्तैस्सह मन्त्रयेत्। तैर्मन्त्रयमाणो हि मन्त्रबुद्धिं गुप्तिं च लभत इति॥

"न" इति कौटिल्यः। अनवस्था ह्येषा। मन्त्रिभिस्त्रिभिश्चतुर्भिर्वा सह मन्त्रयेत। मन्त्रयमाणो ह्येकेनार्थकृच्छ्रेषु निश्चयं नाधिगच्छेत्। एकश्च मन्त्री यथेष्टमनवग्रहश्चरति। द्वाभ्यां मन्त्रयमाणो द्वाभ्यां संहताभ्यामवगृह्यते। विगृहीताभ्यां विनाश्यते। त्रिषु चतुर्षु वा नैकान्तं कृच्छ्रेणोपपद्यते महादोषम्।

उपपन्नं तु भवति। ततः परेषु कृच्छ्रेणार्थनिश्चयो गम्यते, मन्त्रो वा रक्ष्यते।

देशकालकार्यवशेन त्वेकेन सह द्वाभ्यामेको वा यथासामर्थ्यं मन्त्रयेत।

कर्मणामारम्भोपायः, पुरुषद्रव्यसम्पत्, देशकालविभागः, विनिपातप्रतीकारः, कार्यसिद्धिरिति पञ्चाङ्गो मन्त्रः। तानेकैकशः पृच्छेत् समस्तांश्च। हेतुभिश्चैषां मतिप्रविवेकान् विद्यात्। अवाप्तार्थः कालं नातिक्रामयेत्। न दीर्घकालं मन्त्रयेत न च तेषां पक्ष्यैर्येषां अपकुर्यात्।

"मन्त्रिपरिषदं द्वादशामात्यान्कुर्वीते"ति मानवाः।

"षोडशे"ति बार्हस्पत्याः।

"विंशतिम्" इत्यौशनसाः।

"यथासामर्थ्यम्" इति कौटिल्यः।

ते ह्यस्य स्वपक्षं परपक्षं च चिन्तयेयुः। अकृतारम्भमारब्धानुष्ठानमनुष्ठितविशेषं नियोगसम्पदं च कर्मणां कुर्युः। आसन्नैस्सह कार्याणि पश्येत्। अनासन्नैस्सह पत्रसम्प्रेषणेन मन्त्रयेत। इन्द्रस्य हि मन्त्रिपरिषदृषीणां सहस्रम्। स तच्चक्षुः। तस्मादिमं द्वयक्षं सहस्राक्षमाहुः।

आत्ययिके कार्ये मन्त्रिणो मन्त्रिपरिषदं चाहूय ब्रूयात्। तत्र यद्भूयिष्ठाः कार्यसिद्धिकरं वा ब्रूयुस्तत्कुर्यात् कुर्वतश्च—

नास्य गुह्यं परे विद्युः छिद्रं विद्यात्परस्य च।
गूहेत्कूर्म इवाङ्गानि यत्स्याद्विवृतमात्मनः॥
यथा ह्यश्रोत्रियः श्राद्धं न सतां भोक्तुमर्हति।
एवमश्रुतशास्त्रार्थो न मन्त्रं श्रोतुमर्हति॥

इति कौटिलीयार्थशास्त्रे विनयाधिकारिके प्रथमाधिकरणे
पञ्चदशोऽध्यायः मन्त्राधिकारः।

# १२ प्रक. दूतप्रणिधिः।

उद्धृतमन्त्रो दूतप्रणिधिः। अमात्यसम्पदोपेतो निसृष्टार्थः। पादगुणहीनः परिमितार्थः। अर्धगुणहीनः शासनहरः॥

सुप्रतिविहितयानवाहनपुरुषपरिवापः प्रतिष्ठेत। "शासनमेवं वाच्यः परस्य वक्षत्येवं तस्येदं प्रतिवाक्यमेवमतिसन्धातव्यम्" इत्यधीयानो गच्छेत्। अटव्यन्तःपालपुरराष्ट्रमुख्यैश्च प्रतिसंसर्गं गच्छेत्। अनीकस्थानयुद्धप्रतिग्रहापसारभूमीरात्मनः परस्य चावेक्षेत। दुर्गराष्ट्रप्रमाणं सारवृत्तिगुप्तिच्छिद्राणि चोपलभेत। पराधिष्ठानमनुज्ञातः प्रविशेत्। शासनं च यथोक्तं ब्रूयात् प्राणाबाधेऽपि दृष्टे। परस्य वाचि वक्त्रे दृष्ट्यां च प्रसादं वाक्यपूजनमिष्टपरिप्रश्नं गुणकथासङ्गमासन्नमासनं सत्कारमिष्टेषु स्मरणं विश्वासगमनं च लक्षयेत्तुष्टस्य, विपरीतमतुष्टस्य। तं ब्रूयात—"दूतमुखा वै राजानस्त्वं चान्ये च ! तस्मादुद्धृतेष्वपि शस्त्रेषु यथोक्तं वक्तारस्तेषामन्तावसायिनोऽप्यवध्याः। किमङ्ग पुनर्ब्राह्मणः। परस्यैतद्वाक्यमेष दूतधर्मः" इति।

वसेदविसृष्टः प्रपूजया नोत्सिक्तः। परेषु बलित्वं न मन्येत। वाक्यमनिष्टं सहेत। स्त्रियः पानं च वर्जयेत्। एकश्शयीत। सुप्तमत्तयोर्हि भावज्ञानं दृष्टम्। कृत्यपक्षोपजापमकृत्यपक्षे गूढप्रणिधानं, रागापरागौ भर्तरि, रन्ध्रं च प्रकृतीनां तापसवैदेहकव्यञ्जनाभ्यामुपलभेत। तयोरन्तेवासिभिश्चिकित्सकपाषण्डव्यञ्जनोभयवेतनैर्वा। तेषामसम्भाषायां याचकमत्तोन्मत्तसुप्रलापैः पुण्यस्थानदेवगृहचित्रलेख्यसंज्ञाभिर्वा चारमुपलभेत। उपलब्धस्योपजापमुपेयात्। परेण चोक्तःस्वासां प्रकृतीनां परिमाणं नाचक्षीत। "सर्वं वेद भवा"निति ब्रूयात्, कार्यसिद्धिकरं वा। कार्यस्यासिद्धावुपरुध्यमानस्तर्कयेत्। किं भर्तुर्मे व्यसनमासन्नं पश्यन्, स्वं वा व्यसनप्रतिकर्तुकामः; पार्ष्णिग्राहासारावन्तःकोपमाटविकं वा समुत्थापयितुकामः; मित्रमाक्रन्दं वा व्यापादयितुकामः; स्वं वा परतो विग्रहमन्तःकोपमाटविकं वा प्रतिकर्तुकामः; संसिद्धं मे भर्तुर्यात्राकालमभिहन्तुकाम; सस्यकुप्यपण्यसंग्रहं दुर्गकर्म बलसमुत्थानं वा कर्तुकामः; स्वसैन्यानां व्यायामदेशकालावाकाङ्क्षमाणः; परिभवप्रमादाभ्यां वा संसर्गानुबन्धार्थी वा, मामुपरुणद्धीति। ज्ञात्वा वसेदपसरेद्वा। प्रयोजनमिष्टमवेक्षेत वा। शासनमनिष्टमुक्त्वा बन्धवधभयादविसृष्टो व्यपगच्छेदन्यथा नियम्येत।

प्रेषणं सन्धिपालत्वं प्रतापो मित्रसंग्रहः ।
उपजापस्सुहृद्भेदो दण्डगूढातिसारणम् ॥
बन्धुरत्नापहरणं चारज्ञानं पराक्रमः ।
समाधिमोक्षो दूतस्य कर्म योगस्य चाश्रयः ॥
स्वदूतैः कारयेदेतत् परदूतांश्च रक्षयेत् ।
प्रतिदूतापसर्पाभ्यां दृश्यादृश्यैश्च रक्षिभिः ॥

इति कौटिलीयार्थशास्त्रे विनयाधिकारिके प्रथमाधिकरणे
षोडशोऽध्यायः दूतप्रणिधिः ।

## १३ प्रक. राजपुत्ररक्षणम् ।

रक्षितो राजा राज्यं रक्षत्यासन्नेभ्यः परेभ्यश्च । पूर्वं दारेभ्यः पुत्रेभ्यश्च । दाररक्षणं निशान्तप्रणिधौ वक्ष्यामः ।

पुत्ररक्षणं—जन्मप्रभृति राजपुत्रान् रक्षेत् । कर्कटकसधर्माणो हि जनकभक्षाः राजपुत्राः ।

"तेषामजातस्नेहे पितर्युपांशुदण्डश्श्रेयान्" इति भारद्वाजः ।

"नृशंसमदृष्टवधः, क्षत्रविनाशश्चेति" विशालाक्षः । तस्मादेकस्थानावरोधश्श्रेयानिति ।

"अहिभयमेत"दिति पाराशराः । कुमारो हि विक्रमभयान्मां पिता रुणद्धीति ज्ञात्वा तमेवाङ्के कुर्यात्तस्मादन्तपालदुर्गे वासश्श्रेयानिति ।

"औरभ्रकं भयमेतत्" इति पिशुनः । प्रत्यापत्तेर्हि तदेव कारणं ज्ञात्वाऽन्तपालसखस्स्यात् । तस्मात् स्वविषयादपकृष्टे सामन्तदुर्गे वासश्श्रेया"निति ।

"वत्सस्थानमेत"दिति कौणपदन्तः । वत्सेनेव हि धेनुं पितरमस्य सामन्तो दुह्यात् । तस्मान्मातृबन्धुषु वासश्श्रेयानिति ।

"ध्वजस्थानमेतत्" इति वातव्याधिः । तेन हि ध्वजेनादितिकौशिकवदस्य मातृबान्धवा भिक्षेरन् । तस्माद् ग्राम्यधर्मेष्वेनमवसृजेयुः । सुखोपरुद्धा हि पुत्राः पितरं नाभिद्रुह्यन्तीति ।

"जीवन्मरणमेतत्" इति कौटिल्यः। काष्ठमिव हि घुणजग्धं राजकुलमविनीतपुत्रमभियुक्तमात्रं भज्येत। तस्मादृतुमत्यां महिष्यां ऋत्विजश्चरुमैन्द्राबार्हस्पत्यं निर्वपेयुः। आपन्नसत्त्वायां कौमारभृत्यो गर्भभर्मणि प्रजनने च वियतेत। प्रजातायाः पुत्रसंस्कारं पुरोहितः कुर्यात्। समर्थं तद्विदो विनयेयुः।

"सत्रिणामेकश्चैनं मृगयाद्यूतमद्यस्त्रीभिः प्रलोभयेत्—पितरि विक्रम्य राज्यं गृहाणेति। तदन्यस्सत्त्री प्रतिषेधयेत्" इत्याम्भीयाः।

"महादोषमबुद्धबोधन"मिति कौटिल्यः। नवं हि द्रव्यं येन येनार्थजातेनोपदिह्यते तत्तदाचूषति। एवमयं नवबुद्धिर्यद्यदुच्यते तत्तच्छास्त्रोपदेशमिवाभिजानाति। तस्माद्धर्ममर्थं चास्योपदिशेन्नाधर्ममनर्थं च।

सत्रिणस्त्वेनं 'तव स्मः' इति वदन्तः पालयेयुः। यौवनोत्सेकात् परस्त्रीषु मनः कुर्वाणं आर्याव्यञ्जनाभिस्स्त्रीभिरमेध्याभिश्शून्यागारेषु रात्रावुद्वेजयेयुः। मद्यकामं योगपानेनोद्वेजयेयुः। द्यूतकामं कापटिकैः पुरुषैरुद्वेजयेयुः। मृगयाकामं प्रतिरोधकव्यञ्जनैस्त्रासयेयुः। पितरि विक्रमबुद्धिं तथेत्यनुप्रविश्य भेदयेयुः।

"अप्रार्थनीयो राजा, विपन्ने घातस्सम्पन्ने नरकपातः, संक्रोशः, प्रजाभिरेकलोष्टवधश्चे"ति।

विरागं प्रियमेकपुत्रं वा बध्नीयात्। बहुपुत्रः प्रत्यन्तमन्यविषयं वा प्रेषयेद्यत्र गर्भः पण्यं डिम्बो वा न भवेत्। आत्मसम्पन्नं सैनापत्ये यौवराज्ये वा स्थापयेत्। बुद्धिमानाहार्यबुद्धिर्दुर्बुद्धिरिति पुत्रविशेषाः। शिष्यमाणो धर्मार्थावुपलभते चानुतिष्ठति च बुद्धिमान्। उपलभमानो नानुतिष्ठत्याहार्यबुद्धिः। अपायनित्यो धर्मार्थद्वेषी चेति दुर्बुद्धिः।

स यद्येकपुत्रः पुत्रोत्पत्तावस्य वियतेत। पुत्रिकापुत्रानुत्पादयेद्वा। वृद्धस्तु व्याधितो वा राजा मातृबन्धुतुल्यगुणवत्सामन्तानामन्यतमेन क्षेत्रे बीजमुत्पादयेत्। न चैकपुत्रमविनीतं राज्ये स्थापयेत्।

बहूनामेकसंरोधः पिता पुत्रहितो भवेत्।
अन्यत्रापद ऐश्वर्यं ज्येष्ठभागी तु पूज्यते॥
कुलस्य वा भवेद्राज्य कुलसङ्घो हि दुर्जयः।
अराजव्यसनाबाधः शश्वदावसति क्षितिम्॥

इति कौटिलीयार्थशास्त्रे विनयाधिकारिके प्रथमाधिकरणे
सप्तदशोऽध्यायः राजपुत्ररक्षणम।

---

# १४-१५ प्रक. अवरुद्धवृत्तमवरुद्धे च वृत्तिः।

राजपुत्रः कृच्छ्रवृत्तिरसदृशे कर्मणि नियुक्तः पितरमनुवर्तेत, अन्यत्र प्राणाबाधकप्रकृतिकोपपातकेभ्यः। पुण्यकर्मणि नियुक्तः पुरुषमधिष्ठातारं याचेत। पुरुषाधिष्ठितश्च सविशेषमादेशमनुतिष्ठेत्। अभिरूपं च कर्मफलमौपायनिकं च लाभं पितुरुपनाययेत्॥

तथाऽप्यतुष्यन्तमन्यस्मिन् पुत्रे दारेषु वा स्निह्यन्तमरण्याय आपृच्छेत। बन्धवधभयाद्वा यस्सामन्तो न्यायवृत्तिर्धार्मिकः सत्यवागविसंवादकः प्रतिग्रहीता मानयिता चाभिपन्नानां तमाश्रयेत। तत्रस्थः कोदण्डसम्पन्नः प्रवीरपुरुषकन्यासम्बन्धमटवीसम्बन्धं कृत्यपक्षोपग्रहं वा कुर्यात्।

एकचरस्सुवर्णपाकमणिरागहेमरूप्यपण्याकरकर्मान्तानाजीवेत्। पाषण्डसङ्घद्रव्यमश्रोत्रियभोग्यं देवद्रव्यमाढ्यविधवाद्रव्यं वा गूढमनुप्रविश्य सार्थयानपात्राणि च मदनरसयोगेनातिसन्धायापहरेत्। पारग्रामिकं वा योगमातिष्ठेत्। मातुः परिजनोपग्रहेण वा चेष्टेत।

कारुशिल्पिकुशीलवचिकित्सकवाग्जीवनपाषण्डच्छद्मभिर्वा नष्टरूपस्तद्व्यञ्जनसखः छिद्रे प्रविश्य राज्ञः शस्त्ररसाभ्यां प्रहृत्य ब्रूयात्—"अहमसौ कुमारः, सहभोग्यमिदं राज्यमेको नार्हति भोक्तुं तत्र ये कामयन्ते भर्तुं तानाहं द्विगुणेन भक्तवेतनेनोपस्थास्ये" इति। इत्यवरुद्धवृत्तम्॥

अवरुद्धं तु मुख्यपुत्रमपसर्पाः प्रतिपाद्यानयेयुः। माता वा प्रतिगृहीता। त्यक्तं गूढपुरुषाः शस्त्ररसाभ्यां हन्युः। अत्यक्तं तुल्यशीलाभिस्स्त्रीभिः पानेन मृगयया वा प्रसज्य रात्रावुपगृह्यानयेयुः।

उपस्थितं च राज्येन मदूर्ध्वमिति सान्त्वयेत्।
एकस्थमथ संरुन्ध्यात् पुत्रवान्वा प्रवासयेत्॥

इति कौटिलीयार्थशास्त्रे विनयाधिकारिके प्रथमाधिकरणे
अष्टादशोऽध्यायः अवरुद्धवृत्तमवरुद्धे च वृत्तिः।

---

# १६ प्रक. राजप्रणिधिः ।

राजानमुत्तिष्ठमानमनुत्तिष्ठन्ते भृत्याः । प्रमाद्यन्तमनुप्रमाद्यन्ति । कर्माणि चास्य भक्षयन्ति । द्विषद्भिश्चातिसन्धीयते । तस्मादुत्थानमात्मनः कुर्वीत । नालिकाभिरहरष्टधा रात्रिं च विभजेत् । छायाप्रमाणेन वा । त्रिपौरुषी पौरुषी चतुरङ्गुला यच्छाया मध्याह्न इति पूर्वे दिवसस्याष्टभागाः । तैः पश्चिमाः व्याख्याताः ।

तत्र पूर्वे दिवस्याष्टभागे रक्षाविधानमायव्ययौ च शृणुयात् । द्वितीये पौरजानपदानां कार्याणि पश्येत् । तृतीये स्नानभोजनं सेवेत । स्वाध्यायं च कुर्वीत । चतुर्थे हिरण्यप्रतिग्रहमध्यक्षांश्च कुर्वीत । पञ्चमे मन्त्रिपरिषदा पत्रसंप्रषेणेन मन्त्रयेत । चारगुह्यबोधनीयानि च बुद्ध्येत । षष्ठे स्वैरविहारं मन्त्रं वा सेवेत । सप्तमे हस्त्यश्वरथायुधीयान् पश्येत् । अष्टमे सेनापतिसखो विक्रमं चिन्तयेत् । प्रतिष्ठितेऽहनि सन्ध्यामुपासीत ।

प्रथमे रात्रिभागे गूढपुरुषान् पश्येत् । द्वितीये स्नानभोजनं कुर्वीत स्वाध्यायं च । तृतीये तूर्यघोषेण संविष्टः चतुर्थपञ्चमौ शयीत । षष्ठे तूर्यघोषेण प्रतिबुद्धः शास्त्रमितिकर्तव्यतां च चिन्तयेत् । सप्तमे मन्त्रमध्यासीत, गूढपुरुषांश्च प्रेषयेत् । अष्टमे ऋत्विगाचार्यपुरोहितसखः स्वस्त्ययनानि प्रतिगृह्णीयात्, चिकित्सकमाहानसिकमौहूर्तिकांश्च पश्येत् । सवत्सां धेनुं वृषभं च प्रदक्षिणीकृत्योपस्थानं गच्छेत् ।

आत्मबलानुकूल्येन वा निशाहर्भागान् प्रतिविभज्य कार्याणि सेवेत ।

उपस्थानगतः कार्यार्थिनामद्वारासङ्गं कारयेत् । दुर्दर्शो हि राजा कार्याकार्यविपर्यासमासन्नैः कार्यते । तेन प्रकृतिकोपमरिवशं वा गच्छेत् । तस्माद्देवताश्रमपाषण्डश्रोत्रियपशुपुण्यस्थानानां बालवृद्धव्याधितव्यसन्यनाथानां स्त्रीणां च क्रमेण कार्याणि पश्येत्, कार्यगौरवादात्ययिकवशेन वा ।

सर्वमात्ययिकं कार्यं शृणुयान्नातिपातयेत् ।<br>
कृच्छ्रसाध्यमतिक्रान्तमसाध्यं वा विजायते ॥<br>
अग्न्यगारगतः कार्यं पश्येद्वैद्यतपस्विनाम् ।<br>
पुरोहिताचार्यसखः प्रत्युत्थायाभिवाद्य च ॥<br>
तपस्विनां तु कार्याणि त्रैविद्यैस्सह कारयेत् ।<br>
मायायोगविदां चैव न स्वयं कोपकारणात् ॥

राज्ञो हि व्रतमुत्थानं यज्ञः कार्यानुशासनम् ।
दक्षिणा वृत्तिसाम्यं च दीक्षितस्याभिषेचनम् ॥
प्रजासुखे सुखं राज्ञः प्रजानां च हिते हितम् ।
नात्मप्रियं हितं राज्ञः प्रजानां तु प्रियं हितम् ॥
तस्मान्नित्योत्थितो राजा कुर्यादर्थानुशासनम् ।
अर्थस्य मूलमुत्थानमनर्थस्य विपर्ययः ॥
अनुत्थाने ध्रुवो नाशः प्राप्तस्यानागतस्य च ।
प्राप्यते फलमुत्थानाल्लभते चार्थसम्पदम् ॥

इति कौटिलीयार्थशास्त्रे विनयाधिकारिके प्रथमाधिकरणे
एकोनविंशोऽध्यायः राजप्रणिधिः ।

## १७ प्रक. निशान्तप्रणिधिः ।

वास्तुकप्रशस्ते देशे सप्राकारपरिखाद्वारमनेककक्ष्यापरिगतमन्तःपुरं कारयेत् ।

कोशगृहविधानेन वा मध्ये वासगृहं, गूढभित्तिसञ्चारं मोहनगृहं तन्मध्ये वा वासगृहं, भूमिगृहं वा, आसन्नकाष्ठचैत्यदेवतापिधानद्वारमनेकसुरुङ्गासञ्चारं । प्रासादं वा गूढभित्तिसोपानं, सुषिरस्तम्भप्रवेशापसारं वा । वासगृहं यन्त्रबद्धतलावपातं कारयेद् आपत्प्रतीकारार्थमापदि वा कारयेत् । अतोऽन्यथा वा विकल्पयेत् सहाध्यायिभयात् ।

मानुषेणाग्निना त्रिरपसव्यं परिगतमन्तःपुरमग्निरन्यो न दहति, न चात्रान्योऽग्निर्ज्वलति, वैद्युतेन भस्मना मृत्संयुक्तेन करकवारिणाऽवलिप्तं च ।

जीवन्तीश्वेतामुष्ककपुष्पवन्दाकाभिरक्षीवे जातस्याश्वत्थस्य प्रतानेन वा गुप्तं सर्पा विषाणि वा न प्रसहन्ते । मार्जारमयूरनकुलपृषतोत्सर्गः सर्पान् भक्षयति शुकश्शारिका भृङ्गराजो वा सर्पविषशङ्कायां क्रोशति । क्रौञ्चो विषाभ्यासे माद्यति, ग्लायति जीवंजीवकः, म्रियते मत्तकोकिलः, चकोरस्याक्षिणी विरज्येते । इत्येवं अग्निविषसर्पेभ्यः प्रतिकुर्वीत ।

पृष्ठतः कक्ष्याविभागे स्त्रीनिवेशो गर्भव्याधिवैद्यप्रख्यातसंस्था वृक्षोदकस्थानं

च । बहिः कन्याकुमारपुरम् । पुरस्तादलङ्कारभूमिः मन्त्रभूमिरुपस्थानं कुमाराध्यक्षस्थानं च । कक्ष्यान्तरेष्वन्तर्वंशिकसैन्यं तिष्ठेत् ।

अन्तर्गृहगतस्स्थविरस्त्रीपरिशुद्धां देवीं पश्येत् । न काञ्चिदभिगच्छेत् । देवीगृहे लीनो हि भ्राता भद्रसेनं जघान, मातुश्शय्यान्तर्गतश्च पुत्रः कारूशम्, लाजान्मधुनेति विषेण पर्यस्य देवी काशिराजम्, विषदिग्धेन नूपुरेण वैरन्त्यं, मेखलामणिना सौवीरं, जालूथमादर्शेन, वेण्यां गूढं शस्त्रं कृत्वा देवी विदूरथं जघान । तस्मादेतान्यास्पदानि परिहरेत् ।

मुण्डजटिलकुहकप्रतिसंसर्गं बाह्याभिश्च दासीभिः प्रतिषेधयेत् । न चैनाः कुल्याः पश्येयुरन्यत्र गर्भव्याधिसंस्थाभ्यः । रूपाजीवास्स्नानप्रघर्षशुद्धशरीराः परिवर्तितवस्त्रालङ्काराः पश्येयुः । आशीतिकाः पुरुषाः पञ्चाशत्कास्स्त्रियो वा मातापितृव्यञ्जनास्स्थविरवर्षवराभ्यागारिकाश्चावरोधानां शौचाशौचं विद्युः स्थापयेयुश्च स्वामिहिते ।

स्वभूमौ च वसेत्सर्वः परभूमौ न सञ्चरेत् ।
न च बाह्येन संसर्गं कश्चिदाभ्यान्तरो व्रजेत् ॥
सर्वं चावेक्षितं द्रव्यं निबद्धागमनिर्गमम् ।
निर्गच्छेदधिगच्छेद्वा मुद्रासङ्क्रान्तभूमिकम् ॥

इति कौटिलीयार्थशास्त्रे विनयाधिकारिके प्रथमाधिकरणे
विंशोऽध्यायः निशान्तप्रणिधिः ।

## १८ प्रक. आत्मरक्षितकम् ।

शयनादुत्थितस्स्त्रीगणैर्धन्विभिः परिगृह्यत, द्वितीयस्यां कक्ष्यायां कञ्चुकोष्णीषिभिर्वर्षवराभ्यागारिकैः, तृतीयस्यां कुब्जवामनकिरातैः, चतुर्थी मन्त्रिभिस्सम्बन्धिभिर्दौवारिकैश्च प्रासपाणिभिः ।

पितृपैतामहं महासम्बन्धानुबन्धं शिक्षितमनुरक्तं कृतकर्माणं जनमासन्नं कुर्वीत, नान्यतोदेशीयमकृतार्थमानं, स्वदेशीयं वाऽप्यकृत्योपगृहीतम् अन्तर्वंशिकसैन्यं राजानमन्तःपुरं च रक्षेत् ।

गुप्ते देशे माहानसिकः सर्वमास्वादबाहुल्येन कर्म कारयेत् । तद्राजा तथैव प्रतिभुञ्जीत पूर्वमग्नये वयोभ्यश्च बलिं कृत्वा ।

अग्नेर्ज्वालाधूमनीलता शब्दस्फोटनं च विषयुक्तस्य, वयसां विपत्तिश्च। अन्नस्योष्मा मयूरग्रीवाभः शैत्यं, आशु क्लिष्टस्येव वैवर्ण्यं सोदकत्वमक्लिन्नत्वं च। व्यञ्जनानामाशुशुष्कत्वं च क्वाथः श्यामफेनपटलविच्छिन्नभावो गन्धस्पर्शरस-वधश्च। द्रव्येषु हीनातिरिक्तछायादर्शनं फेनपटलसीमन्तोर्ध्वराजीदर्शनं च। रसस्य मध्ये नीला राजी, पयसस्ताम्रा, मद्यतोययोः काली, दध्नश्श्यामा, मधुनश्श्वेता। द्रव्याणामार्द्राणामाशुप्रम्लानत्वमुत्पक्वभावः क्वाथनीलश्यावता च। शुष्काणामाशुशातनं वैवर्ण्यं च। कठिनानां मृदुत्वं मृदूनां कठिनत्वं च। तदभ्याशे क्षुद्रसत्ववधश्च। आस्तरणप्रावरणानां श्याममण्डलता तन्तुरोम-पक्ष्मशातनं च। लोहमणिमयानां पङ्कमलोपदेहता स्नेहरागगौरवप्रभाववर्ण-स्पर्शवधश्चेति विषयुक्तलिङ्गानि।

विषप्रदस्य तु शुष्कश्यावववक्त्रता वाक्सङ्गस्स्वेदी विजृम्भणं चातिमात्रं वेपथुः प्रस्खलनं वाक्यविप्रेक्षणमावेशः कर्मणि स्वभूमौ चानवस्थानमिति।

तस्मादस्य जाङ्गलीविदो भिषजश्चसन्नास्स्युः।

भिषग्भैषज्यागारादास्वादविशुद्धमौषधं गृहीत्वा पाचकपेषकाभ्यामात्मना च प्रतिस्वाद्य राज्ञे प्रयच्छेत्। पानं पानीयं चौषधेन व्याख्यातम्।

कल्पकप्रसाधकास्स्नानशुद्धवस्त्रहस्तास्समुद्रमुपकरणमन्तर्वंशिकहस्तादादाय परिचरेयुः।

स्नापकसंवाहकास्तरकरजकमालाकारकर्म दास्यः कुर्युः ताभिरधिष्ठिता वा शिल्पिनः। आत्मचक्षुषि निवेश्य वस्त्रमाल्यं दद्युः। स्नानानुलेपनप्रघर्षचूर्ण-वासस्नानीयानि स्ववक्षोबाहुषु च। एतेन परस्मादागतकं च व्याख्यातम्।

कुशीलवाश्शस्त्राग्निरसवर्जं नर्मयेयुः। आतोद्यानि चैषामन्तस्तिष्ठेयुरश्व-रथद्विपालङ्काराश्च।

मौलपुरुषाधिष्ठितं यानवाहनमारोहेत्, नावं चाप्तनाविकाधिष्ठिताम्। अन्यनौप्रतिबद्धां वातवेगवशां च नोपेयात्। उदकान्ते सैन्यमासीत। मत्स्य-ग्राहविशुद्धमवगाहेत। व्यालग्राहपरिशुद्धमुद्यानं गच्छेत्।

लुब्धकः श्वगणिभिरपास्तस्तेनव्यालपराबाधभयं चललक्षपरिचयार्थं मृगारण्यं गच्छेत्।

आप्तशस्त्रग्राहाधिष्ठितस्सिद्धतापसं पश्येत्, मन्त्रिपरिषदा सामन्तदूतं। सन्नद्धोऽश्वं हस्तिनं रथं वाऽऽरूढस्सन्नद्धमनीकं गच्छेत्।

निर्याणेऽभियाने च राजमार्गमुभयतः कृतारक्षं दण्डिभिरपास्तशस्त्रहस्त-

प्रव्रजितव्यञ्जं गच्छेत् । न पुरुषसम्बाधमवगाहेत । यात्रासमाजोत्सवप्रवहणानि च दशवर्गिकाधिष्ठितानि गच्छेत् ।

यथा च योगपुरुषैरन्यान् राजाधितिष्ठति ।
तथाऽयमन्यबाधेभ्यो रक्षेदात्मानमात्मवान् ।।

इति विनयाधिकारिके प्रथमाधिकरणे एकविंशोऽध्यायः आत्मरक्षितकम् ।
एतावता कौटिलीयार्थशास्त्रस्य विनयाधिकारिकं
प्रथमाधिकरणं समाप्तम् ।

# अध्यक्षप्रचारः—द्वितीयाधिकरणम् ।

## १६ प्रक. जनपदनिवेशः ।

भूतपूर्वमभूतपूर्वं वा जनपदं परदेशापवाहनेन स्वदेशाभिष्यन्दवमनेन वा निवेशयेत् ।

शूद्रकर्षकप्रायं कुलशतावरं पञ्चशतकुलपरं ग्रामं क्रोशद्विक्रोशसीमानमन्योन्यारक्षं निवेशयेत् । नदीशैलवनगृष्टिदरीसेतुबन्धशाल्मलीशमीक्षीरवृक्षानन्तेषु सीम्नां स्थापयेत् ।

अष्टशतग्राम्या मध्ये स्थानीयं चतुश्शतग्राम्या द्रोणमुखं, द्विशतग्राम्या स्कार्वटिकं, दशग्रामीसंग्रहेण संग्रहणं स्थापयेत् ।

अन्तेष्वन्तपालदुर्गाणि जनपदद्वाराण्यन्तपालाधिष्ठितानि स्थापयेत् । तेषामन्तराणि वागुरिकशबरपुलिन्दचण्डालारण्यचरा रक्षेयुः ।

ऋत्विगाचार्यपुरोहितश्रोत्रियेभ्यो ब्रह्मदेयान्यदण्डकराण्याभिरूपदायकानि प्रयच्छेत् । अध्यक्षसङ्ख्यायकादिभ्यो गोपस्थानिकानीकास्थचिकित्सकाश्वदमकजङ्घाकारिकेभ्यश्च विक्रयाधानवर्जम् ।

करदेभ्यः कृतक्षेत्राण्यैकपुरुषिकाणि प्रयच्छेत् । अकृतानि कर्तृभ्यो नादेयात् ।

अकृषतामाच्छिद्यान्येभ्यः प्रयच्छेत् । ग्रामभृतकवैदेहका वा कृषेयुः । अकृषन्तोऽवहीनं दद्युः । धान्यपशुहिरण्यैश्चैनाननुगृह्णीयात् तान्यनु सुखेन दद्युः ।

अनुग्रहपरिहारौ चैभ्यः कोशवृद्धिकरौ दद्यात् । कोशोपघातिकौ वर्जयेत् । अल्पकोशो हि राजा पौरजानपदानेव ग्रसते । निवेशसमकालं यथागतकं वा परिहारं दद्यात् । निवृत्तपरिहारान् पितेवानुगृह्णीयात् ।

आकरकर्मान्तद्रव्यहस्तिवनव्रजवणिक्पथप्रचारान् वारिस्थलपथपण्यपत्तनानि च निवेशयेत् ।

सहोदकमाहार्योदकं वा सेतुं बन्धयेत् । अन्येषां वा बध्नतां भूमिमार्गवृक्षोपकरणानुग्रहं कुर्यात्, पुण्यस्थानारामाणां च । सम्भूयसेतुबन्धादपक्रामतः कर्मकरबलीवर्दाः कर्म कुर्युः । व्ययकर्मणि च भागी स्यात्, न चांशं लभेत ।

मत्स्यप्लवहरितपण्यानां सेतुषु राजा स्वाम्यं गच्छेत् ।

दासाहितकबन्धूनशृण्वतो राजा विनयं ग्राहयेत् । बालवृद्धव्याधितव्यसन्यनाथांश्च राजा बिभृयात्, स्त्रियमप्रजातां प्रजातायाश्च पुत्रान् ।

बालद्रव्यं ग्रामवृद्धा वर्ज [र्ध] येयुरा व्यवहारप्रापणात्, देवद्रव्यं च ।

अपत्यदारान् मातापितरौ भ्रातृनप्राप्तव्यवहारान् भगिनीः कन्या विधवाश्चाबिभ्रतः शक्तिमतो द्वादशपणो दण्डोऽन्यत्र पतितेभ्यः अन्यत्र मातुः ।

पुत्रदारमप्रतिविधाय प्रव्रजतः पूर्वस्साहसदण्डः, स्त्रियं च प्रव्राजयतः । लुप्तव्यवायः प्रव्रजेदापृच्छ्य धर्मस्थान् । अन्यथा नियम्येत ।

वानप्रस्थादन्यः प्रव्रजितभावः सजातादन्यः सङ्घस्सामुत्थायिकादन्यस्समयानुबन्धो वा नास्य जनपदमुपनिवेशेत ।

न च तत्रारामा विहारार्थाः शालास्स्युः । नटनर्तनगायनवादकवाग्जीवनकुशीलवा वा न कर्मविघ्नं कुर्युः, निराश्रयत्वात् ग्रामाणां, क्षेत्राभिरतत्वाच्च पुरुषाणां कोशविष्टिद्रव्यधान्यरसवृद्धिर्भवतीति ।

परचक्राटवीग्रस्तं व्याधिदुर्भिक्षपीडितम् ।
देशं परिहरेद्राजा व्ययक्रीडाश्च वारयेत् ॥
दण्डविष्टिकराबाधैः रक्षेदुपहतां कृषिम् ।
स्तेनव्यालविषग्राहैः व्याधिभिश्च पशुव्रजान् ॥
वल्लभैः कार्मिकैस्स्तेनैरन्तपालैश्च पीडितम् ।
शोधयेत्पशुसङ्घैश्च क्षीयमाणं वणिक्पथम् ॥
एवं द्रव्यद्विपवनं सेतुबन्धमथाकरान् ।
रक्षेत्पूर्वकृतान्राजा नवांश्चाभिप्रवर्तयेत् ॥

इति कौटिलीयार्थशास्त्रे अध्यक्षप्रचारे द्वितीयाधिकरणे प्रथमोऽध्यायः जनपदनिवेशः, आदितो द्वाविंशः ।

## २० प्रक. भूमिच्छिद्रविधानम् ।

अकृष्यां भूमौ पशुभ्यो विवीतानि प्रयच्छेत् ।

प्रदिष्टाभयस्थावरजङ्गमानि च ब्राह्मणेभ्यो ब्रह्मसोमारण्यानि, तपोवनानि च तपस्विभ्यो गोरु(त)पराणि प्रयच्छेत् । तावन्मात्रमेकद्वारं खातगुप्तं स्वादुफलगुल्मगुच्छमकण्टकिद्रुममुत्तानतोयाशयं दान्तमृगचतुष्पदं भग्ननखदंष्ट्र-व्यालमार्गायुकहस्तिहस्तिनीकलभं मृगवनं विहारार्थं राज्ञः कारयेत् ।

सर्वातिथिमृगं प्रत्यन्ते चान्यन्मृगवनं भूमिवशेन वा निवेशयेत् ।

कुप्यप्रदिष्टानां च द्रव्याणामेकैकशो वा वनं निवेशयेत्, द्रव्यवनकर्मान्ता-नटवीश्च द्रव्यवनापाश्रयाः । प्रत्यन्ते हस्तिवनमटव्यारक्षं निवेशयेत् ।

नागवनाध्यक्षः पार्वतं नादेयं सारसमानूपं च नागवनं विदितपर्यन्तप्रवेश-निष्कसनं नागवनपालैः पालयेत् । हस्तिघातिनं हन्युः । दन्तयुगं स्वयं मृगस्याहरतः सपादचतुष्पणो लाभः ।

नागवनपाला हस्तिपकपादपाशिकसैमिकवनचरकपारिकर्मिकसखा हस्ति-मूत्रपुरीषच्छन्नगन्धा भल्लातकीशाखाप्रतिच्छन्नाः पञ्चभिस्सप्तभिर्वा हस्तिबन्ध-कीभिः सह चरन्तः शय्यास्थानपद्यालण्डकूलपातोद्देशेन हस्तिकुलपर्यग्रं विद्युः ।

यूथचरमेकचरं निर्यूथं यूथपतिं हस्तिनं व्यालं मत्तं पोतं बद्धमुक्तं च निबन्धेन विद्युः । अनीकस्थप्रमाणैः प्रशस्तव्यञ्जनाचारान् हस्तिनो गृह्णीयुः । हस्तिप्रधानो विजयो राज्ञाम् । परानीकव्यूहदुर्गस्कन्धावारप्रमर्दना ह्यतिप्रमाण-शरीराः प्राणहरकर्माणो हस्तिन इति ।

> कलिङ्गाङ्गगजाः श्रेष्ठाः प्राच्याश्चेदिकरूशजाः ।
> दाशार्णाश्चापरान्ताश्च द्विपानां मध्यमा मताः ॥
> सौराष्ट्रिकाः पाञ्चनदाः स्तेषां प्रत्यवरास्स्मृताः ।
> सर्वेषां कर्मणा वीर्यं जवस्तेजश्च वर्धते ॥

इति कौटिलीयार्थशास्त्रे अध्यक्षप्रचारे द्वितीयाधिकरणे द्वितीयोऽध्यायः भूमिच्छिद्रविधानम्, आदितस्त्रयोविंशः ।

---

